KAVYAMALA. 30.

# THE CHANDRAPRABHACHARITA

OF

# VÎRANANDÎ.

EDITED BY

MAHÂMAHOPÂDHYÂYA PANDIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.

PRINTED AND PUBLISHED

BY

TUKARAM JAVAJI

PROPRIETOR OF "JAVAJI DADAJI'S NIRNAYA-SAGARA" PRESS.

BOMBAY.

1892.

*Price* 12 *Annas.*

काव्यमाला ३०.

श्रीवीरनन्दिविरचितं

# चन्द्रप्रभचरितम् ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना
महामहोपाध्यायपण्डितदुर्गाप्रसादेन,
परबोपाह्वेन पाण्डुरङ्गतनूभुवा
काशीनाथशर्मणा च
संशोधितम् ।

तच्च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८९२



मूल्यं १२ आणकाः ।

# चन्द्रप्रभचरितस्य विषयानुक्रमणिका ।



१ सर्गः—मङ्गलाचरणानि । सज्जनदुर्जनवर्णनम् । मङ्गलावतीनाम्नो देशस्य वर्णनम् । तत्र रत्नसंचयाख्यनगरवर्णनम् । रत्नसंचयाधिपतेः कनकप्रभस्य वर्णनम् । तन्महिष्याः सुवर्णमालाया वर्णनम् । तत्तनयस्य पद्मनाभस्य वर्णनम् । एकदा सौधशृङ्गारूढो राजा निकटवर्तिनि पल्वले पानीयपानार्थमागतस्य गोकुलस्य मध्ये एकं महापङ्कनिमग्नं म्रियमाणं जरद्गवं विलोक्य परं निर्वेदमगादिति वर्णनम् । राजा राज्यं पद्मनाभाय वितीर्य तपोऽग्रहीदिति वर्णनम् । पद्मनाभोऽपि निजात्मजाय सुवर्णनाभाय यौवराज्यं दत्वा राजभोगाननुबभूवेति वर्णनम् ॥

२ सर्गः—राज्ञो वनपालमुखाच्छ्रीधराख्यस्य मुनेरागमनश्रवणम् । मुनेस्तत्प्रभावेणोद्यानस्य च विभूतिवर्णनम् । सपरिकरस्य राज्ञो मुनिदर्शनार्थं गमनवर्णनम् । मुनिसमीपे सप्रश्रयं राज्ञो जीवाजीवादिविषयकः प्रश्नः । राजानं प्रति मुनेरुपदेशः । पुना राज्ञो मुनिं प्रति पूर्वजन्मविषयकः प्रश्नः । राजानं प्रति मुनेरुत्तरदानम् । तत्र सुगन्धिनाम्नो देशस्य वर्णनम् ॥

३ सर्गः—श्रीपुराख्यनगरवर्णनम् । तन्नायकस्य श्रीषेणाख्यभूपतेर्वर्णनम् । तन्महिष्याः श्रीकान्ताया वर्णनम् । अनपत्यतया देवीकृतशोकवर्णनम् । दैवायत्ते वस्तुनि कः शोक इति राजोक्तिवर्णनम् । कदाचिद्राज्ञ उद्यानगमनवर्णनम् । तत्र वियतोऽकस्मादवतीर्णेनानन्ताख्यचारणमुनिना सह राज्ञः समागमवर्णनम् । मुनिस्तुतिः । 'अद्यापि मम मानसं किमु शान्तिं नोपगच्छति' इति मुनिं प्रति राज्ञः प्रश्नः । 'यावत्तव मनसि सूनुस्पृहा जागर्ति तावन्न विरतिं यासि' इत्यादि मुनिवाक्यवर्णनम् । नन्दीश्वराराधनमहिम्ना देवी गर्भं दधारेति वर्णनम् । दोहदवर्णनम् । भावितीर्थकरस्य श्रीवर्मणो जन्मोत्सववर्णनम् ॥

४ सर्गः—श्रीवर्मणो वर्णनम् । तस्य प्रभावत्या सह परिणयः । तस्मै यौवराज्यपददानम् । राज्ञो राज्यसौख्यानुभवः । कदाचिदाकाशात्पतन्तीमुल्कामवलोक्य राजा विरक्तो बभूवेति वर्णनम् । विषयगर्हणम् । युवराजं प्रति राज्ञ उपदेशः । राजा राज्यं सूनवे वितीर्य श्रीप्रभाख्यमुनेः पादमूले तपस्तप्त्वा कैवल्यमगादिति वर्णनम् । श्रीवर्मणो दिग्विजयवर्णनम् । तस्य श्रीपुरं प्रत्यागमनवर्णनम् । मार्गे नानावस्तुवर्णनम् । पुरप्रवेशः । कदाचिच्छारद-

जलदावलोकनेन राज्ञो निर्वेदप्राप्तिः । राजा श्रीकान्ताख्याय सूनवे राज्यभारं समर्प्य समाचरिततपश्चर्यः सौधर्मे श्रीधराख्यो देवोऽजनीति वर्णनम् ॥

५ सर्गः—धातकीखण्डे इषुकारगिरिरस्तीति कथनम् । तत्पूर्वभरतेऽलकाख्यदेशवर्णनम् । तत्र कोसलाख्यनगरीवर्णनम् । तदधिपतेरजितंजयाख्यस्य राज्ञो वर्णनम् । तन्महिष्या जितसेनाया वर्णनम् । स श्रीधराख्यो देवोऽजितसेन इति संज्ञया तयोः पुत्रत्वमगादिति वर्णनम् । कुमारवर्णनम् । तस्मै सश्लाघं राजा यौवराज्यपदवीं प्रायच्छदिति वर्णनम् । परिष्कृतायां संसदि राज्ञोऽग्रे चन्द्ररुचिनाम्नासुरेण युवराजोऽपहृत इति वर्णनम् । पुत्रं प्रति राज्ञो विलापवर्णनम् । तपोभूषणाख्यस्य यतेरागमनवर्णनम् । यतिसमीपे राज्ञः पुत्रप्राप्तिचिन्तानिवेदनवर्णनम् । 'कतिपयैरहोभिस्तव सूनुरागमिष्यति' इति राजानं प्रति मुनेराश्वासनम् ॥

६ सर्गः—असुरेण मुक्तस्य युवराजस्य मनोरमाख्ये सरसि निपतनवर्णनम् । तत उत्तरणवर्णनम् । परुषाख्याटवीवर्णनम् । पर्वतवर्णनम् । वनसीमान्तपरिज्ञानार्थं तदुपरि युवराजारोहणम् । तत्र केनचित्पुरुषेण साकं युवराजस्य विवादवर्णनम् । तयोर्युद्धवर्णनम् । युवराजेन पराजितः स पुरुषो दिव्यरूपमास्थाय 'अहं हिरण्यनामा त्रिदशोऽस्मि' इत्यभिधाय 'वरं वृणीष्व' इत्यवोचदिति वर्णनम् । तन्मुखेन चन्द्ररुचियुवराजयोर्वैरकारणवर्णनम् । युवराजो हिरण्यप्रभावेणात्मानं वनसीम्नि व्यलोकयदिति वर्णनम् । तत्र पलायमानाञ्जनान्दृष्ट्वा तत्कारणं कंचित्पृष्टवानिति वर्णनम् । तन्मुखेन 'अरिंजयाख्ये देशे विपुलाख्यपुरे जयवर्मराज्ञः शशिप्रभाभिधानां कन्यां महेन्द्राख्यो भूपतिर्बलादपहर्तुमागतः' इति युद्धश्रवणम् । तत्र गमनम् । तत्र महेन्द्रं निहत्य जयवर्मणा सह युवराजस्य राजभवनप्रवेशवर्णनम् । युवराजे शशिप्रभाया अनुरागवर्णनम् । तदाकर्ण्य संतुष्टो जयवर्मा युवराजाय वाचा कन्यां प्रादादिति वर्णनम् । विजयार्धगिरेर्दक्षिणत आदित्याख्यस्य नगरस्य वर्णनम् । तदधीश्वरो धरणीध्वजाख्यखेचरेन्द्रः कदाचित्सभायां कंचन क्षुल्लकमद्राक्षीदिति वर्णनम् । तन्मुखाच्छशिप्रभापरिणेतुः सकाशादात्मनो वधमश्रौषीदिति वर्णनम् । तेन जयवर्मणः पत्तनं रुद्धमिति वर्णनम् । जयवर्माणं प्रत्युद्धवाख्यस्य दूतस्य प्रेषणम् । दूतोक्तिवर्णनम् । दूतविसर्जनम् । जयवर्मसमीपेऽजितसेनस्य धरणीध्वजवधप्रतिज्ञावर्णनम् । संग्रामार्थं दिव्यरथागमनवर्णनम् । संग्रामवर्णनम् । धरणीध्वजवधः । अजितसेनस्य शशिप्रभया सह

परिणयवर्णनम् । सवधूकस्य तस्य स्वपुरं प्रति गमनवर्णनम् । पुरप्राप्तिवर्णनम् ॥

७ सर्गः—अजितसेनस्य लोकोत्तरैश्वर्यप्राप्तिवर्णनम् । राज्याभिषेकवर्णनम् । स्वयंप्रभाख्यस्य जिनपतेरागमनवर्णनम् । अजितंजयस्य मुनिं प्रति जीवबन्धमोक्षविषयकः प्रश्नः । तदुत्तरदानम् । अजितंजयोऽतितरां निर्वेदमधिगत्य श्रवणसेवितं पदं शिश्रिय इति वर्णनम् । अजितसेनस्य दिग्जैत्रयात्रावर्णनम् । समृद्धिवर्णनम् । पुरप्रवेशवर्णनम् । पुरस्त्रीवर्णनम् । राज्योपभोगवर्णनम् ॥

८ सर्गः—वसन्तवर्णनम् । राजमुखेन वसन्तवर्णनम् ॥

९ सर्गः—उपवनयात्रावर्णनम् । उपवनविहारवर्णनम् । जलकेलिवर्णनम् ॥

१० सर्गः—सायंकालवर्णनम् । अन्धकारवर्णनम् । चन्द्रोदयवर्णनम् । रात्रिक्रीडावर्णनम् । वैतालिकमुखेन निशावसानवर्णनम् ॥

११ सर्गः—राज्ञः सभाप्रवेशवर्णनम् । गजक्रीडावर्णनम् । गजेन निहतं कंचिदालोक्य राजा निर्वेदं गतवानिति वर्णनम् । विषयगर्हणम् । तदैव गुणप्रभाख्यस्य मुनीन्द्रस्योद्यानपालमुखादागमनश्रवणम् । सपरिकरस्य राज्ञो मुनीन्द्रदर्शनार्थं गमनवर्णनम् । तत्रानेकमुनिवर्णनम् । राजमुखेन मुनीन्द्रस्तुतिः । राज्ञो मुनीन्द्रस्य च संवादवर्णनम् । राजा राज्यं पुत्राय समर्प्य मुनीन्द्रसकाशात्तपोऽग्रहीदिति वर्णनम् । तपश्चरणवर्णनम् । राज्ञोऽच्युतकल्पलाभवर्णनम् । 'स एवेन्द्रकल्पाच्च्युत्वात्र रत्नसंचयपुरे सुवर्णमालाकनकप्रभयोस्तनूजः पद्मनाभस्त्वमसि' इति कथनम् । स्वजन्मान्तराण्याकर्ण्य तत्र संदिहानः पद्मनाभस्तत्प्रत्ययार्थं श्रीधरमुनिं पुनः पप्रच्छेति वर्णनम् । 'इतो दशमेऽह्नि तव नगरे यूथं परित्यज्य कश्चिदेको गज आयास्यति तत्प्रत्ययात्त्वमखिलं मदुक्तं निश्चेष्यसि' इति राजानं प्रति मुनेरुक्तिवर्णनम् । वनकेलिनाम्नो गजस्यागमनवर्णनम् । तद्वशीकरणवर्णनम् ॥

१२ सर्गः—गजार्थं राजानं प्रति प्रेषितस्य पृथिवीपालदूतस्योक्तिवर्णनम् । युवराजदूतयोरुक्तिप्रत्युक्तिवर्णनम् । मन्त्रविचारवर्णनम् ॥

१३ सर्गः—जैत्रयात्रावर्णनम् । मार्गे प्राप्ताया जलवाहिन्याख्यसरितो वर्णनम् ॥

१४ सर्गः—मणिकूटाख्यस्य गिरेर्वर्णनम् । सेनासंनिवेशवर्णनम् । तत्र ससैन्यस्य पृथिवीपालनरपतेरभिगमनम् ॥

१५ सर्गः—संग्रामवर्णनम् । पृथिवीपालराज्ञो वधवर्णनम् । तत्र कुन्तरिपुशिरोदर्शनेन राज्ञः पद्मनाभस्य निर्वेदप्राप्तिवर्णनम् । पद्मनाभो निजतनूजाय सुव-

र्णनाभाय राज्यभारं वितीर्य श्रीधरमुनेः सकाशाद्दीक्षामादाय तपश्चचारेति वर्णनम् । स तनूं परित्यज्यानुत्तरवैजयन्तेऽहमिन्द्रो बभूवेति वर्णनम् ॥

१६ सर्गः—पूर्वदेशवर्णनम् । तत्र चन्द्रपुरीवर्णनम् । तदधिपतेर्महासेनाख्यस्य भूभुजो वर्णनम् । तन्महिष्या लक्ष्मणाया वर्णनम् । राज्ञो दिग्विजयवर्णनम् । पुरागमनवर्णनम् । राज्ञ्याः स्वप्नदर्शनवर्णनम् । अथ तस्यामहमिन्द्रो गर्भत्वेनावतीर्ण इति वर्णनम् ॥

१७ सर्गः—जिनोत्पत्तिवर्णनम् । अथ शची मायाजनितं तदनुकृतिरूपमर्भकं मातुरुरसि विनिवेश्य जिनमुज्जहारेति वर्णनम् । स्वर्लोकं प्राप्तस्य जिनस्य सेवावर्णनम् । तत्राभिषेकवर्णनम् । पुरंदरमुखेन जिनप्रभाववर्णनम् । पुनस्तथैव तस्य मातुरुत्सङ्गप्राप्तिवर्णनम् । बालक्रीडावर्णनम् । तदर्थं कुबेरप्रेषिताभरणवर्णनम् । विवाहकथनम् । साम्राज्यलाभवर्णनम् । प्रजास्वास्थ्यादिवर्णनम् । इन्द्राज्ञयागतस्यातिवृद्धविग्रहधारिणो धर्मरुचिनाम्नः सुरस्य राजानं प्रत्युक्तिवर्णनम् । राजमुखेन संसारासारत्ववर्णनम् । राज्ञस्तपोग्रहणवर्णनम् । दिव्यैश्वर्यवर्णनम् ॥

१८ सर्गः—संक्षेपतो जिनसिद्धान्तवर्णनम् ॥

०—ग्रन्थकर्तुः प्रशस्तिः ॥

# काव्यमाला।

## महाकविश्रीवीरनन्दिप्रणीतं
## चन्द्रप्रभचरितम्।

### प्रथमः सर्गः।

श्रियं क्रियाद्यस्य सुरागमे नटत्सुरेन्द्रनेत्रप्रतिबिम्बलाञ्छिता।
सभा बभौ रत्नमयी महोत्पलैः कृतोपहारेव स वोऽ[1]ग्रजो जिनः ॥ १ ॥
स पातु यस्य स्फटिकोपलप्रभे प्रभावितानेविनिमग्नमूर्तिभिः।
विदिद्युते दुग्धपयोधिमध्यगैरिवामरैर्वः [2]शशिलाञ्छनो जिनः ॥ २ ॥
अनन्तविज्ञानमनन्तवीर्यतामनन्तसौख्यत्वमनन्तदर्शनम्।
बिभात योऽनन्तचतुष्टयं विभुः स नोऽस्तु [3]शान्तिर्भवदुःखशान्तये ॥ ३ ॥
[4]जराजरत्याः स्मरणीयमीश्वरं स्वयंवरीभूत[5]मनश्वरश्रियः।
निरामयं वीतभयं भवच्छिदं नमामि [6]वीरं नृसुरासुरैः स्तुतम् ॥ ४ ॥
हितं विसंवादविवर्जितस्थितिं परैरभेद्यं प्रवितीर्णनिर्वृति[7]म्।
शरण्यभूतं शरणं जिनागमं गतोऽस्म्यहं भव्यजनैकबान्धवम् ॥ ५ ॥
गुणान्विता निर्मलवृत्तमौक्तिका नरोत्तमैः कण्ठविभूषणीकृता।
न हारयष्टिः [8]परमेव दुर्लभा समन्तभद्रादिभवा च भारती ॥ ६ ॥
गुणान[9]गृह्णन्सुजनो न निर्वृतिं प्रयाति दोषान[10]वदन्न दुर्जनः।
चिरंतनाभ्यासनिबन्धनेरिता गुणेषु दोषेषु च जायते मतिः ॥ ७ ॥

---

१. अग्रजः प्रथमजिनः श्रीऋषभदेवः. २. अष्टमस्तीर्थकरः श्रीचन्द्रप्रभो योऽस्मिन्काव्ये वर्णितः. ३. षोडशस्तीर्थकरः. ४. जरैव जरती वृद्धस्त्री तस्याः स्मरणीयमपरोक्षम्. सर्वदा जरारहितमिति भावः. ५. मोक्षलक्ष्म्याः स्वयंवरपतिम्. ६. अन्तिमं तीर्थकरम्. ७ निर्वृतिर्मोक्षः. ८. परं केवलं हारयष्टिर्हारलतैव दुर्लभा दुष्प्रापा न, किं तु समन्तभद्रादिभवा भारती च दुर्लभा. ९. अस्वीकुर्वन्. १०. अकथयन्.

गुणान्यथैवो[1]पदिशन्प्रशंसया गुरुत्वबुद्ध्या सुजनो नमस्यते ।
तथैव दोषान्[2]दिशतः प्रणिन्दया कृतः खलस्यापि मयायमञ्जलिः ॥ ८ ॥
सुदुष्करं यन्मनुते [3]गणाधिपोऽप्यवैति वाग्देव्यपि भारमात्मनः ।
विधित्सुरर्हच्चरितं तदल्पधी[4]र्ध्रुवं न यास्यामि न हास्यतां सताम् ॥ ९ ॥
तथापि तस्मिन्[5]गुरुसेतुवाहिते सुदुष्प्रवेशेऽपि पुराणसागरे ।
यथात्मशक्ति प्रयतोऽस्मि पो[6]तकः पथीव यूथाधिपतिप्रवर्तिते ॥ १० ॥
अथास्ति [7]शृङ्गोल्लिखितामरालयो [8]द्विपूरणद्वीपगतो गभस्तिभिः ।
सृजन्नमेघां कलमाग्रपिङ्गलैस्तडिच्छ्रियं व्योमनि [9]पूर्वमन्दरः ॥ ११ ॥
विभूष्य [10]तत्पूर्वविदेहमात्मनः श्रिया स्थितो नाकिनिवाससंनिभः ।
समस्ति देशो भुवि मङ्गलावतीत्यभिख्यया यः प्रथितोऽर्थयुक्तया ॥ १२ ॥
निरन्तरैर्यत्र शुकाङ्गकोमलैः समानसस्याङ्कुरसंचयैश्चिताः ।
जनस्य चेतांसि हरन्ति भूमयो [11]हरिन्मणिव्रातविनिर्मिता इव ॥ १३ ॥
[12]निशाकरांशुप्रकराच्छवारिभिर्विनिद्रनीलोत्पलरश्मिरञ्जितैः ।
च्युतैर्निरालम्बतया विहायसो विभाति खण्डैरिव यः सरोवरैः ॥ १४ ॥
निशासु शीतांशुमणिस्थलच्युतैः पयःप्रवाहैः परिपूरितान्तराः ।
वहन्ति यस्मिञ्[13]जलराशियोषितो निदाघकालेष्वपि [14]कूलमुद्रुजाः ॥ १५ ॥
[15]सदायमसत्प्रतिपक्षभूतया कृताधिवासो धनधान्यसंपदा ।
इतीव यस्मिन्विहिताभ्यसूयया न जातु लोको विपदा विलोक्यते ॥ १६ ।
विकासवद्भिः शरदभ्रपाण्डुरैः सितातपत्रैरिव यः प्रसारितैः ।
समस्तदेशाधिपतित्वमात्मनो व्यनक्ति लोके [16]स्थलनीरजाकरैः ॥ १७ ॥

---

१. निरूपयन्. २. प्रतिपादयतः. ३. गणधरः. ४. अपि तु हास्यतां यास्याम्येव. 'नु' इति पाठे काकुः. ५. गुरव एव सेतवस्तैर्वाहिते आचार्यपरम्पराप्रापिते. ६. कलभः. श्रीवीरनाथप्ररूपितेऽपि पुराणसमुद्रे श्रीजिनसेनादिसेतुना प्रयतोऽस्मीति भावः. ७. शिखरोद्धृष्टनाकः. ८. द्वयोः पूरणो द्वितीयः स चासौ द्वीपश्च तद्गतः. द्वितीयद्वीपस्थित इति भावः. ९. पूर्वमेरुनामा पर्वतः. १०. तस्य पूर्वविदेहस्तं तत्पूर्वविदेहमात्मनः श्रिया विभूष्य मङ्गलावतीनामको देशः समस्ति विद्यते. ११. मरकतविनिर्मिता इव. १२. चन्द्रकरनिकरानिर्मलजलैः. १३. समुद्रयोषितो नद्यः. १४. कूलं रोध उद्रुजन्ति उद्धर्षयन्तीति कूलमुद्रुजाः. १५. अयं देशः. १६. स्थलपद्माकरैः.

समुज्ज्वलाभिः [1]कनकादियोनिभिर्विकासिनीभिः [2]खनिभिः समन्ततः ।
कृतास्पदा यत्र जनर्द्धिहेतुभिर्यथार्थनामा [3]वसुमत्यजायत ॥ १८ ॥
[4]शिखावलीलीढघनाघनाध्वभिर्बहिःस्थितैर्नूतनधान्यराशिभिः ।
विभान्ति यस्मिन्[5]निगमाः कुतूहलादिवोपयातैः [6]कुलमेदिनीधरैः ॥ १९ ॥
गतैः [7]समासत्तिमिवेतरेतरश्रिया[8]मनन्यत्र भुवां दिदृक्षया ।
[9]निरन्तरोद्यानवितानराजितैर्महागृहैर्[10]ग्रामपुरैर्विभाति यः ॥ २० ॥
[11]वणिक्पथस्तूपितरत्नसंचयं समस्ति तस्मिन्नथ [12]रत्नसंचयम् ।
पुरं यद्[13]आलानितमत्तवारणैर्विभाति हर्म्यैश्च [14]समत्तवारणैः ॥ २१ ॥
गभीरनादैः [15]प्रतिमानिपातिभिः पयोधरैर्मन्दसमीरणेरितैः ।
[16]जलेभयूथैरिव संकुलान्तरा विराजते यत्परिखा प्रथीयसी ॥ २२ ॥
[17]परीतशृङ्गैः स्फुरदंशुजालकैर्निशासु नक्षत्रगणैः समन्ततः ।
विभाति यस्मिन्[18]परिधिः स्थिरप्रभैरिव प्रदीपप्रकरैः [19]प्रबोधितैः ॥ २३ ॥
मलीमसं भृङ्गनिभेन लक्ष्मणा विलोक्यते यत्र [20]घनाध्वमध्यगम् ।
गृहैरिवाभ्रंलिहशृङ्गकोटिभिर्निघृष्टदेहच्छवि चन्द्रमण्डलम् ॥ २४ ॥
मदाभमम्भो विसृजद्भिरुल्लसत्तडिल्लतालंकरणैरधोगतैः ।
शरीरिणां गोपुरशृङ्गवर्तिनां वितन्यते यत्र [21]गजभ्रमो घनैः ॥ २५ ॥
सुगन्धिनिःश्वासमरुन्मनोहरे मनोभुवा पाण्डुनि कामिनीमुखे ।
समापतन्राहुरिवेन्दुशङ्कया विलोक्यते यत्र मधुव्रतव्रजः ॥ २६ ॥
निपातयन्ती तरले विलोचने [22]सजीवचित्रासु निवासभित्तिषु ।
नवा वधूर्यत्र जनाभिशङ्कया न गाढमालिङ्गति जीवितेश्वरम् ॥ २७ ॥

---

१. कनकादिधातूत्पत्तिस्थानैः. २. आकरैः. ३. पृथिवी. ४. शिखरचुम्बितमेघमार्गैः. ५. ग्रामाः. ६. कुलपर्वतैः. ७. सांनिध्यम्. ८. न अन्यत्र भवन्तीत्यनन्यत्रभुवस्तासां परस्परलक्ष्मीणाम्. ९. सान्द्रोपवनसमूहशोभितैः. १०. ग्रामाणि च पुराणि च ग्रामपुराणि तैः. ११. विपणिपुञ्जितरत्नसमूहम्. १२. एतन्नामकं नगरम्. १३. स्तम्भनिबद्धमत्तगजैः. १४. प्रग्रीवकसहितैः. १५. प्रतिबिम्बितैः. १६. वारिवारणसमूहैरिव. १७. वेष्टितशिखरैः. १८. प्राकारः. १९. प्रकाशितैर्दीपसमूहैरिव. २०. आकाशगतम्. २१. गोपुरशृङ्गापेक्षया नीचैः स्थितैः. २२. जीवचित्राणि पुत्तलिकाविशेषास्तत्सहितासु.

[1]शशाङ्ककान्ताश्ममयोर्ध्वभूमिकात्पतत्पयः सौधचयाद्विधूद्गमे ।
शिखण्डिनां यत्र पयोदशङ्किनां तनोत्यकाण्डेऽपि विका[2]सि ताण्डवम् ॥२८॥
निशागमे सौधशिरोधिरोहिणो वधूजनस्यामलगण्डमण्डलात् ।
[3]अभिन्नदेशो विधुराननाम्बुजाद्वि[4]भज्यते यत्र कलङ्कलेखया ॥ २९ ॥
समुल्लसद्भिः शरदभ्रपाण्डुभिर्ध्वजांशुकैर्यद्विनिवारितातपैः ।
[5]गृहाग्रभागोल्लिखितस्य निर्मलैर्विभाति निर्मोकलवैरिवोष्णगोः ॥ ३० ॥
विशाल[6]शालोपवनोपशोभिनः शिरःसमुत्तम्भितमेघपङ्क्तयः ।
जि[7]नालयाः सिं[8]हसनाथमूर्तयो विभान्ति यस्मिन्धरणीधरा इव ॥ ३१ ॥
[9]मदेन योगो द्विरदेषु केवलं विलोक्यते धातुषु सो[10]पसर्गता ।
भवन्ति शब्देषु नि[11]पातनक्रियाः कुचेषु यस्मिन्क[12]रपीडनानि च ॥ ३२ ॥
द्विजि[13]ह्वता यत्र परं फणाभृतां कुलेषु चि[14]न्तापरता च योगिषु ।
नितम्बिनीनामुदरेषु केवलं [15]दरिद्रतौष्ठेष्व[16]धरत्वसंभवः ॥ ३३ ॥
विभान्ति यस्मिन्बहुधोज्ज्वलोपलप्रणद्धभित्तीनि गृहाणि सर्वतः ।
निजेषु लीनानि दधत्सु दीप्रतां [17]पतंगसंतापभियेव धा[18]मसु ॥ ३४ ॥
स न प्रदेशोऽस्ति न यो जनाकुलो जनोऽप्यसौ नास्ति न यो धनेश्वरः ।
धनं न तद्भोगसमन्वितं न यन्न यत्र भोगोऽपि स यो न [19]संततः ॥ ३५ ॥
विलुप्तशोभानि विलोचनोत्पलैः सितेतराण्यम्बुरुहाणि योषिताम् ।
मरुच्चलद्वीचिनि यत्र शीतले लुठन्ति ता[20]पादिव दीर्घिकाजले ॥ ३६ ॥

---

१. चन्द्रकान्तमणिनिर्मितोर्ध्ववेदिकात् राजप्रासादसमूहात्. २. प्रोत्फुल्लबर्हम्. ३. न भिन्नो देशो यस्य सः. गण्डमण्डलतुल्य इत्यर्थः. ४. विभिद्यते. ५. सौधोपरिदेशप्रघृष्टस्य सूर्यस्य कञ्चुकलेशैरिव ध्वजांशुकैर्यत्पुरं विभाति. ६. शालः प्राकारो वृक्षविशेषश्च. ७. चैत्यानि. ८. एकत्र लेप्यनिर्मितकेसरिभिरपरत्र साक्षादेव. ९. मद्यादिजनितेन गर्वेण च. १०. उपसर्गा उपद्रवाः प्रादयश्च. ११. निपाता व्याकरणप्रसिद्धाः निपातनं च मारणम्. १२. करो राजग्राह्यभागः हस्तश्च. १३. जिह्वाद्वययुक्तत्वं पिशुनता च. १४. चिन्तनमेव चिन्ता ध्यानम्; (पक्षे) उद्वेगः. १५. कृशत्वं निर्धनत्वं च. १६. अधरशब्दवाच्यत्वं हीनजातित्वं च. १७. सूर्यतापभीत्या. १८. महःसु. १९. अनवरतः. २०. अम्बुरुहाणां तापः पराजयजनितः

महागुणैरप्य[1]गुणैर्मदोज्झितैरपि प्रवृत्त[2]प्रेमदैर्महाजनैः ।
अधिष्ठितं यत्प्रविभाति निर्भयैरपि प्रकामं [3]परलोकभीरुभिः ॥ ३७ ॥
स यत्र दोषः परमेव [4]वेदिकाशिरःशिखाशायिनि [5]मानभञ्जने ।
[6]पतत्कुले कूजति यन्न जानते रसं स्वकान्तानुनयस्य कामिनः ॥ ३८ ॥
अथाभवद्भूरिगुणैरलंकृतो नरेश्वरस्तस्य पुरस्य शासिता ।
न केनचिद्यस्तुलितद्युतिस्तथाप्युवाह [7]रूढ्या कनकप्रभाभिधाम् ॥ ३९ ॥
यशोभिरेणाङ्ककलासमुज्ज्वलैः पुरः प्रयातैरिव पूरितान्तरे ।
[8]विधूपितारातिकुलानि भूतले न यस्य तेजांसि [9]ममुर्महौजसः ॥ ४० ॥
प्रयासमुच्चैः कटकेषु [10]भूभृतां गणेषु संचारवशादवाप या ।
बभूव भीतेव ततः पुनश्चिरं स्थिरा जयश्रीरधिगम्य यद्भुजम् ॥ ४१ ॥
अचिन्त्यमाहात्म्यगुणो जनाश्रयः स्वविक्रमाक्रान्तसमस्तविष्टपः ।
श्रिया सनाथः [11]पुरुषोत्तमोऽप्यभून्न यो [12]वृषोच्छेदविधायिचेष्टितः ॥ ४२ ॥
गरीयसा यस्य परार्थसंपदो निसर्गजत्यागगुणेन निर्जितैः ।
शुचेव [13]कल्पोपपदैर्महीरुहैर्दधे नितान्तं [14]विमनस्कवृत्तिता ॥ ४३ ॥
कलासमग्रोऽपि जनाभिनन्द्यपि श्रियं दधानोऽप्यभिभूतविष्टपाम् ।
[15]प्रदोषसंसर्गितया यमुज्ज्वलं शशाक जेतुं न कुरङ्गलाञ्छनः ॥ ४४ ॥
कुलं चरित्रेण विशुद्धवृत्तिना यशोभिराशाः शरदभ्रविभ्रमैः ।
वपुर्गुणैर्यः [16]श्रवणेन शेमुषीं [17]विशेषयामास [18]जगद्विशेषकः ॥ ४५ ॥
न भूरिदानोऽपि मदेन संगतिं जगाम यः साधित[19]शत्रुषड्गणः ।
[20]अहीनसंसर्गसमन्वितोऽपि वा द्विजिह्वसंसर्गतया न दूषितः ॥ ४६ ॥

---

१. अस्य विष्णोर्गुणा इव गुणा येषु तैः. २. प्रकृष्टमदैः परिणतहर्षैश्च. ३. परलोकः शत्रुजनः प्रेत्यभावश्च. ४. प्रासादोपरिभूमिकाशिखराग्रवासिनि. ५. उद्दीपकस्य पक्षिकूजितस्य श्रवणादेव माननिवृत्तिरिति भावः. ६. पक्षिसमूहे. ७. लोकप्रसिद्ध्या. ८. संतापितशत्रुसमूहानि. ९. न मान्ति स्म. १०. पर्वतानां राज्ञां च कटकेषु नितम्बेषु शिबिरेषु च. ११. पुरुषोत्तमो विष्णुरपि. १२. वृषोऽरिष्टासुरो धर्मश्च. १३. कल्पवृक्षैः. १४. जडता. १५. रजनीमुखं प्रकृष्टो दोषश्च प्रदोषः. १६. शास्त्राकर्णनेन. १७. अलंचकार. १८. जगत्तिलकः. १९. 'कामः क्रोधश्च हर्षश्च मानो लोभस्तथा मदः । अन्तरङ्गोऽरिषड्वर्गः क्षितीशानां भवत्ययम् ॥'. २०. अहीनः सर्पराजः (पक्षे) उत्तमः.

निजैः समस्तानभिभूय धामभिः समुद्धतान्[1]मण्डलिनोऽतिदुःसहैः ।
चकार यो गामपि सर्वविष्टपप्रतीतकीर्तिः [2]करिणीं वसुंधराम् ॥ ४७ ॥
नितान्तवृद्धेन [3]कठोरवृत्तिना सनीतिना कञ्चुकिनेव तेजसा ।
निरन्तरं यस्य विभोर्वधूरिव व्यधीयत श्रीश्चपलापि निश्चला ॥ ४८ ॥
[4]धराश्रयः संततभूतिसंगमः शशाङ्ककान्तो धृतनागनायकः ।
अधोभवद्गो[5]पतिरीश्वरोऽपि सन्बभूव यो नासमदृष्टिदूषितः ॥ ४९ ॥
यदीयगाम्भीर्यगुणेन निर्मलप्रसिद्धिना लुप्तयशोमहाधनः ।
करोति [6]पूत्कारमिवाधुनाप्यसावुदस्तकल्लोलभुजः पयोनिधिः ॥ ५० ॥
नरेन्द्रविद्याधिगमाद्विशुद्धया विमृश्य कार्याणि विधित्सतो धिया ।
न यस्य निःशेपितशत्रुसंततेरजायता[7]ष्टापदवृत्तिचेष्टितम् ॥ ५१ ॥
[8]रतिप्रदानप्रवणेन कुर्वता विचित्र[9]वर्णक्रमवृत्तिमुज्ज्वलाम् ।
गुणानुरागोपनता कृतायतिः प्रसाधिता येन वधूरिव प्रजा ॥ ५२ ॥
अतीतसंख्यैः परिरब्धकीर्तिभिः शरन्निशानाथमरीचिनिर्मलैः ।
रुरुत्सुभिर्दोषचमूमिवाखिलैरकारि यस्मिन्[10]समुदायिता गुणैः ॥ ५३ ॥
पराक्रमाक्रान्तमहीभुजो जगल्ललामलक्ष्मीनिलयीकृतोरसः ।
नृपस्य तस्याथ नि[11]शान्तनायिका सुवर्णमालेति बभूव भामिनी ॥ ५४ ॥
यदीयमेणाङ्कमरीचिहारिणा विसारिणा कान्तिमयेन वारिणा ।
नितान्तनि[12]र्धौतमिवारिनिन्दितं न जातुचिच्छीलमभून्मलीमसम् ॥ ५५ ॥
वहन्स्मरापाण्डुकपोलमण्डले शशाङ्कशङ्कामिव वक्त्रपङ्कजे ।
सहासफेनो विचकास यत्तनावनूनलावण्यमयः पयोनिधिः ॥ ५६ ॥
भुवः समुद्धर्तुरधिष्ठितात्मनो [13]बलेन [14]सत्यानुरतैकचेतसः ।
बभूव लक्ष्मीः [15]पुरुषोत्तमस्य सा मृगेक्षणा तस्य नृपस्य मन्दिरे ॥ ५७ ॥

---

१. मण्डलेशान्. २. हस्तिनीम्; (पक्षे) करयुक्ताम्. ३. कञ्चुकिपक्षे दाक्षिण्यवर्जितेन. ४. धरा भूमिर्धरश्च पर्वतः. ५. गोपतयो राजानः; (पक्षे) वृषः. ६. दीनाक्रन्दमिव. ७. अष्टापदो हिंस्रो जन्तुविशेषः. ८. रतिरनुरागः सुरतं च. ९. वर्णा ब्राह्मणादयः शुक्लादयश्च. १०. सेना खलु समुदायाभावे जेतुं न शक्यते. ११. सकलान्तःपुरस्वामिनी. १२. 'निर्धूत' ख. १३. पराक्रमेण बलरामेण च. १४. सत्यं तथ्यं सत्या च सत्यभामा. १५. पुरुषोत्तमः श्रीकृष्णोऽपि.

परस्परस्नेहनिबद्धचेतसोस्तयोरभूद्धामनिधिस्तनंधयः ।
स येन दध्रे नरकद्विषा परं न संज्ञयार्थेन च पद्मनाभता ॥ ५८ ॥
कलासनाथस्य हिमद्युतेरिव हिमेतरांशोरिव तीव्रतेजसः ।
न यस्य निःशेषजनानुकम्पिनो बभूव बाल्येऽपि विवेकरिक्तता ॥ ५९ ॥
समाचरन्यः शिशुभावदुर्लभाः क्रियाः कृतज्ञो नयमार्गशालिनीः ।
समस्तविद्याधिगमप्रबुद्धधीर्बभूव वृद्धः पलिताङ्कुरैर्विना ॥ ६० ॥
गलन्मदस्योन्नतवंशशालिनो गृहीतसम्यग्विनयस्य सोन्नतेः ।
गजाधिपस्येव गरीयसौजसा युतस्य यस्याभवदङ्कुशो गुरुः ॥ ६१ ॥
विभूषितं यौवनरूपसंपदा विकारवत्या दधतोऽपि विग्रहम् ।
प्रमाथिभिर्यस्य जितान्तरद्विषो मनो न जह्ने व्यसनैर्मनस्विनः ॥ ६२ ॥
स बह्वपत्योऽपि विशामधीश्वरः सुतेन तेनैव रराज जिष्णुना ।
विराजतेऽनेकशकुन्तसंकुलो न राजहंसेन विना जलाशयः ॥ ६३ ॥

अथ जातु स मेदिनीपतिर्निजलक्ष्मीपरिभूपितं पुरम् ।
परिहृष्टमतिर्विलोकयन्नवतस्थे गुरुसौधमूर्धनि ॥ ६४ ॥
विनिपातयता यदृच्छया दृशमासन्नतमैकपल्वले ।
परिपीय पयः समुत्तरन्ददृशे तेन तदा गवां गणः ॥ ६५ ॥
घनपङ्कनिमग्नमक्षमं किल तत्रैकमसौ जरद्गवम् ।
म्रियमाणमवेक्ष्य तत्क्षणादिति निर्वेदमगाद्विचक्षणः ॥ ६६ ॥
क्षणभङ्गुरवृत्ति जीवितं भवभाजामिति नात्र विस्मयः ।
तदिहाद्भुतमेतदीदृशं यदवंस्यद्भिरपि प्रमुह्यते ॥ ६७ ॥
क्षणदृष्टतिरोहितैर्जनो विषयैः स्वप्न इव प्रतार्यते ।
रतिमेति तथापि तेष्वयं जडबुद्धिर्धिगनात्मवेदिताम् ॥ ६८ ॥

१. पद्मनाभः किल नरकस्य दैत्यविशेषस्य द्विट्, अयमपि नरकस्य दुर्गतेरित्यन्वर्थता. २. सदसद्विवेचनशून्यत्वम्. ३. शुक्लकेशैः. ४. स्रवन्मदस्य मदरहितस्य च. ५. वंशः कुलं पृष्ठवंशश्च. ६. गरीयान् पित्रादिश्च. ७. शरीरम्. ८. नरपतिः. ९. वृद्धवृषभम्. १०. अवस्यद्भिर्जानद्भिः. पण्डितैरिति यावत्. पुस्तकद्वयेऽपि 'अवश्यद्भिः' इति पाठः. ११. तत्कालदृष्टनष्टैः.

प्रहतं मरणेन जीवितं जरसा यौवनमेष पश्यति ।
प्रतिजन्तु जनस्तदप्यहो स्वहितं मन्दमतिर्न पश्यति ॥ ६९ ॥
यदतीतमतीतमेव तत्सुखमागामिनि को विनिश्चयः ।
समुपैति वृथा बत श्रमं पुरुषस्तत्क्षणसौख्यमोहितः ॥ ७० ॥
परिणामहिते [1]समीहते पथि सद्यःसुखलिप्सया न यः ।
स शिवादति[2]विप्रकृष्यते ज्वररोगीव [3]विरुद्धसेवया ॥ ७१ ॥
दहनस्तृणकाष्ठसंचयैरपि तृप्येदुदधिर्नदीशतैः ।
न तु कामसुखैः पुमानहो बलवत्ता खलु कापि कर्मणः ॥ ७२ ॥
वपुरप्यतिमात्रमान्तरं त्यजति प्राणिनमायुषः क्षये ।
विरहे खलु कोऽत्र विस्मयो बहिरङ्गैर्धनमित्रबान्धवैः ॥ ७३ ॥
सुखमिष्टसमागमे यथा विरहे [4]तस्य तथैव चासुखम् ।
अत एव [5]सजन्ति [6]निर्वृतौ सुधियः सङ्गसुखैकनिःस्पृहाः ॥ ७४ ॥
[7]हितमेव न वेत्ति कश्चन भजतेऽन्यः खलु तत्र संशयम् ।
विपरीतरुचिः परो जगत्त्रिभिरज्ञानतमोभिराहतम् ॥ ७५ ॥
परिणामसुखं शरीरिणां जिनवाक्यं न विहाय विद्यते ।
सरुजामिव पथ्यमौषधं त[8]दनात्मज्ञतया न रोचते ॥ ७६ ॥
अधिगम्य यथाविधि श्रुतं प्रतिपद्योत्तमसाधुसंगमम् ।
अवयन्[9]नेवफल्गुतामिमामपरः कोऽहमिव प्रमाद्यति ॥ ७७ ॥
सुखमायतिदुःख[10]मक्षजं भजते मन्दमतिर्न बुद्धिमान् ।
मधुदिग्धमुखाममन्दधीरसिधारां खलु को [11]लिलिक्षति ॥ ७८ ॥
असुखैकफलं प्रभज्य यो [12]रसिति प्रेममयं न पल्लवम् ।
[13]प्रविरक्तमतिः प्रवर्तते पुरुषः श्रेयसि हा स वञ्चितः ॥ ७९ ॥

---

१. प्रयतते. २. दूरीक्रियते. ३. अपथ्यभोजनादिना. ४. इष्टस्य. ५. सक्ता भवन्ति. ६. निर्वृतौ मोक्षे. ७. कश्चन मोक्षस्तत्कारणं च हितं तदेव न वेत्ति. अन्यः पुमान् खलु शास्त्रोक्ते तत्र हिते संदेहं भजते; परोऽन्यो विपरीतरुचिः विपरीता अतद्गुणे तद्गुणाभा रुचिः श्रद्धा यस्य सः; एवंविधैस्त्रिभिरज्ञानान्धकारैर्जगदाहतं बाधितम्. ८. जडतया. ९. संसारासारतां जानन्. १०. इन्द्रियजन्यं सुखम्. ११. लेढुमिच्छति. १२. 'झटिति' क. १३. निर्विण्णः.

इति विषयविरक्तश्छन्नया कर्णजाहं[1]
　स्वयमिव स समेत्य व्याहृतो[2] मुक्तिदूत्या ।
न्यविशत मुनिमार्गे[3] चेतसा चारुचेता
　भवति हि मतिभाजां काललब्धिर्न वन्ध्या ॥ ८० ॥

प्रपृच्छ्य सुतमात्मनस्तमपरेद्युरुद्यच्छ्रियं
　प्रमृज्य च तदक्षिणी विगलदश्रुणी पाणिना ।
मुनीन्द्रमविनिन्दितं समभिवन्द्य स श्रीधरं[4]
　तपः समधिशिश्रिये नृपतिभिः समं भूरिभिः ॥ ८१ ॥

गुरुविरहभवेन पद्मनाभो भृशमसुखेन हतस्तदा ततास[5] ।
नरपतिपदमास्थितोऽपि लक्ष्मीर्भवति मुदे नहि बान्धवैर्वियुक्ता ॥ ८२ ॥

विपुलमतिभिर्वृद्धामात्यैः कृतप्रतिबोधनः
　पितृविरहजं हित्वा शोकं कियद्भिरसौ दिनैः ।
नयनविगलद्बाष्पापूरां सुधीः समभावय-
　त्प्रकृतिमुभयीं[6] स्वामिस्नेहाकुलीकृतचेतसम् ॥ ८३ ॥

एतस्यानृजुरयमष्टमीमृगाङ्को व्याक्षिप्तो[7] विकटललाटपट्टकेन ।
संजातानतिभिरितीव तत्र भेजे भूपालैर्न[8] कुटिलता नृपासनस्थे ॥ ८४ ॥

तेजोनिधावुदयधाम्नि सुवर्णनाभ-
　नाम्नि प्रवर्त्य तनये युवराजशब्दम् ।
भोगार्नवास्थित सदानुभवन्स[9] भूपः
　सोमप्रभादशनजातकिणाङ्कितौष्ठः ॥ ८५ ॥

इति श्रीवीरनन्दिकृतावुदयाङ्के चन्द्रप्रभचरिते महाकाव्ये प्रथमः सर्गः ।

---

१. श्रवणसमीपम्. २. आहूत इव. ३. रत्नत्रये चेतसा न्यविशत तस्थौ. ४. श्रीधरनामकम्. ५. चक्राम. ६. अमात्यादिरूपां स्वभावरूपां च. ७. जितः. ८. तस्थौ. ९. सर्वदा निर्विशन्.

द्वितीयः सर्गः ।

अथैकदास्थानगतं प्रतीहारनिवेदितः ।
वनपालो महीपालमिति नत्वा व्यजिज्ञपत् ॥ १ ॥
देव देवोचितस्थाने सुगन्धिपवने वने ।
मुनिरेकः समायातः शब्दार्थाभ्यां मनोहरे ॥ २ ॥
भुवनव्यापिनीं भव्यपुण्डरीकाभिनन्दिनीम् ।
धत्ते श्रीधर इत्याख्यां यो भानुरिव दीधितिम् ॥ ३ ॥
दारुणं यस्तपस्तेजःसौम्यां च दधदाकृतिम् ।
समाहारेण निर्वृत्तः सूर्याचन्द्रमसोरिव ॥ ४ ॥
मोक्षसंधानचित्तेन गुणमार्गणशालिना ।
येन चापधरेणेव भूतेभ्योऽदीयताभयम् ॥ ५ ॥
त्रिकालगोचरानन्तपर्यायैःपरिनिष्ठितम् ।
प्रतिबिम्बमिवादर्शे जगद्यद्वचसीक्ष्यते ॥ ६ ॥
सुवर्णैरभिनिर्वृत्ता दत्तमुक्तोत्तमास्पदाः ।
यस्याश्चर्यकथाः कर्णपूरायन्ते विपश्चिताम् ॥ ७ ॥
भ्रमन्ति भुवनाभोगे निश्चला अपि यद्गुणाः ।
असंख्येयाश्च सर्वत्र व्रजन्ति गणनीयताम् ॥ ८ ॥
यत्पादपांसुसंपर्कादलंकृतशिरोरुहाः ।
निस्पृहा वासचूर्णेषु भवन्ति नृसुरासुराः ॥ ९ ॥
भास्वानपि च यः सेव्यपादोऽभूत्तापवर्जितः ।
विकासयति चाशेषकुमुदं कुमुदोज्ज्वलः ॥ १० ॥
मुनेस्तस्य प्रभावेण या विभूतिरभूद्वने ।
तां विवक्ष्याम्यहं किं तु वक्त्रं नोक्तं करोति मे ॥ ११ ॥

---

१. मालाकारे. २. शब्देन मनोहरनामनि अर्थेन च हृदयहारिणि. ३. मोक्षस्य मुक्तेः संधानमेकाग्रता तत्र चित्तं यस्य; (पक्षे) मोक्षो वेध्यम्. ४. परिकलितम्. ५. गणनीयतां गणनाविषयतां गणेन जनवृन्देन नीयतां प्राप्यतां च. ६. सुगन्धिचूर्णेषु. ७ (पक्षे) भूम्याः प्रमोदम्. ८. वक्तुमिच्छामि.

वसन्तमनपेक्ष्यैव तस्यातिशयविस्मिताः ।
रोमाञ्चानिव मुञ्चन्ति कोरकांश्चूतपादपाः ॥ १२ ॥
तत्सङ्गादिव संजातशान्तचित्तेन पुष्प्यता ।
न विसोढमशोकेन कामिनीपादताडनम् ॥ १३ ॥
बकुला अपि दृष्ट्वा तमणुव्रतमिवाश्रिताः ।
यद्वधूर्मधुगण्डूषाननादृत्यैव पुष्पिताः ॥ १४ ॥
तिलकस्तिलकं पृथ्व्यास्तं दृष्ट्वा व्यकसत्क्षणात् ।
स्वपक्षदर्शनात्कस्य न प्रीतिरुपजायते ॥ १५ ॥
तद्धर्मश्रवणाज्जातविबोधा इव चम्पकाः ।
न मनागप्यजायन्त मलिनालिसमाश्रयाः ॥ १६ ॥
यथा पलाशास्तत्रेश शोभन्ते न च किंशुकैः ।
तथैव जम्बूतरवो विराजन्ते न किं शुकैः ॥ १७ ॥
जयशब्दं वयःशब्दैः कुर्वत्याः काननश्रियः ।
दन्तावलिरिवाभाति कुन्दकुड्मलसंहतिः ॥ १८ ॥
हासानिव विमुञ्चन्तः संतोषात्कुसुमोद्गमान् ।
शिखण्डिताण्डवाटोपं तन्वन्ति कुटजद्रुमाः ॥ १९ ॥
भयात्पलायमानस्य कामस्य गलिता करात् ।
बाणावलिरिवाभाति बाणावलिरितस्ततः ॥ २० ॥
शुचिसङ्गाद्विकासो मे कश्चातोऽपि मुनेः शुचिः ।
इतीव मन्यमानागाद्विकासं नवमल्लिका ॥ २१ ॥
कदम्बैः सहसा नाथ विकसत्कुसुमोत्करैः ।
रोमाञ्चकञ्चुकाधानादहमात्मसमीकृतः ॥ २२ ॥
तिरश्चां संहतिस्तत्र परस्परविरोधिनी ।
विरोधं सहजं हित्वा बन्धुभावेन वर्तते ॥ २३ ॥

---

१. मद्यकुरलकान्. २. उत्तमनायिकया विलोकितस्तिलकवृक्षः पुष्पितो भवति. ३. बाणाख्यवृक्षपङ्क्तिः. ४. शुचिर्निर्मलो ज्येष्ठमासश्च.

इति श्रुत्वा स तद्वाणीं मुनिवृत्तान्तशंसिनीम् ।
स्वाङ्गेऽपि न ममौ हर्षाद्[1]उद्वेल इव वारिधिः ॥ २४ ॥
सत्कृत्य स स्वकीयैस्तं भूषणैः पारितोषिकैः ।
वनपालमथान्यैश्च कृतार्थमकरोद्धनैः ॥ २५ ॥
यस्य देवस्य गन्तव्यं स देवो गृहमागतः ।
इत्युक्तिं घोषयन्नुच्चै[2]रुदस्थादासनादसौ ॥ २६ ॥
दिशि तस्यामवस्थाय यत्रासौ परमेश्वरः ।
बद्ध्वा लक्ष्यमसौ भूमा[3]वनंसीत्तस्य पादयोः ॥ २७ ॥
[4]व्यानशेऽथ तदादेशात्पुरं पटहनिःस्वनः ।
मुनिवन्दनयात्रायां कुर्व[5]न्संकेतिनीः प्रजाः ॥ २८ ॥
पञ्चषानपि कृत्वाग्रे पत्तीन्प्रासैर्नराधिपैः ।
क्रमशः संमिलल्लोकैरक्षुभ्यद्राजगोपुरम् ॥ २९ ॥
सपौरः ससुहृद्वर्गः सकलत्रः सबान्धवः ।
सतनूजः ससामन्तः स [6]चचाल ससैनिकः ॥ ३० ॥
गच्छं[7]ल्लावण्यसंक्रान्तदिदृक्षुनयनो वनम् ।
नन्दनाभिमुखीभूतशक्रशोभां बभार सः ॥ ३१ ॥
क्षणादशोकसंयुक्तं पुंनागपरिवारितम् ।
वनमात्मसमं प्राप्य [8]पिप्रिये पृथिवीपतिः ॥ ३२ ॥
वायुना विदधे किंचित्संजाताध्वपरिश्रमः ।
वनलक्ष्मीविनिःश्वाससमेन [9]विपरिश्रमः ॥ ३३ ॥
सेनापतिं समादिश्य सेनामावासयेति सः ।
प्रविवेश महानागादवतीर्य महावनम् ॥ ३४ ॥
राजलीलां परित्यज्य [10]चामरादिपरिच्छदाम् ।
विनीतः शिष्यवद्भेजे देशं मुनिसमाश्रितम् ॥ ३५ ॥

---

१. उत्तरङ्गः. २. उदतिष्ठत्. ३. ननाम. ४. व्याप्नोति स्म. ५. संकेतयुक्ताः. ६ जगाम. ७. लावण्येन संक्रान्तानि प्रतिबिम्बितानि दिदृक्षूणां द्रष्टुमिच्छूनां नयनानि यत्र सः. ८. तुष्टः. ९. विगतखेदः. १०. चामरादिपरिकरोपेताम्.

ददृशे च मुनिस्तेन स्थितो नीलशिलातले ।
[1]शरत्प्रसन्ने शीतांशुरिवाकाशैकमण्डले ॥ ३६ ॥
[2]त्रिः परीत्य प्रणम्य त्रिस्त्रिर्जयेति निगद्य सः ।
त्रिरुक्तमखिलं कृत्वा [3]न्यविक्षत मुनेः पुरः ॥ ३७ ॥
नृपतेर्मुकुलीकुर्वन्स कराम्भोरुहद्वयम् ।
[4]शीतगुत्वं व्यनक्ति स स्वकीयं मुनिपुंगवः ॥ ३८ ॥
भुवः शोभाभवद्योगाद्याजिनेन्द्रसुरेन्द्रयोः ।
तयोः संगतयोरासीत्सा नरेन्द्रमुनीन्द्रयोः ॥ ३९ ॥
[5]शान्ते जयजयेत्युच्चैर्भव्यकोलाहले ततः ।
दत्ताशीर्मुनिना तेन जगाद जगतीपतिः ॥ ४० ॥
निरालोके जगत्यस्मिन्नदृष्टशिववर्त्मनि ।
सन्मार्गदर्शनान्नाथ त्वमालोक इवोद्गतः ॥ ४१ ॥
खपुष्पं तदहं मन्ये भुवने सचराचरे ।
दिव्यज्ञानमये यन्न स्फुरितं तव चक्षुषि ॥ ४२ ॥
ततोऽवगन्तुमिच्छामि त्वत्तस्तत्त्वं जगत्प्रभो ।
संदिग्धं हि परिज्ञानं [6]गुरुप्रत्ययवर्जितम् ॥ ४३ ॥
केचिदित्थं यतः प्राहुर्[7]नास्तिकागममाश्रिताः ।
न जीवः कश्चिदप्यस्ति पदार्थो [8]मानगोचरः ॥ ४४ ॥
अजीवश्च कथं जीवापेक्षस्[9]तस्यात्यये भवेत् ।
अन्योन्यापेक्षया तौ हि स्थूलसूक्ष्माविव स्थितौ ॥ ४५ ॥
कथं च जीवधर्माः स्युर्बन्धमोक्षादयस्ततः ।
सति धर्मिणि धर्मा हि भवन्ति न तदत्यये ॥ ४६ ॥
तस्माद्[10]उपप्लुतं सर्वं तत्त्वं तिष्ठतु [11]संवृतम् ।
प्रसार्यमाणं शतधा शीर्यते जीर्णवस्त्रवत् ॥ ४७ ॥

---

१. वर्षान्तनिर्मले. २. त्रिः प्रदक्षिणीकृत्य. ३. उपविष्टवान्. ४. चन्द्रत्वम्. ५. उपरते. ६. गुरुविश्वासरिक्तम्. ७. चार्वाकसिद्धान्तम्. ८. प्रमाणविषयः. ९. जीवाभावेऽजीवः कथं वक्तुं युज्यते, जीवाजीवयोः सापेक्षत्वात्. १०. बाधितम्. ११. अप्रसारितम्. जीवो नास्ति अजीवोऽपि नास्ति ततस्तत्त्वमुपप्लुतमेवेति तत्त्वोपप्लववादिनः.

जीवमन्ये प्रपद्यापि तद्धर्मं प्रति वादिनः ।
[1]विवदन्ते प्रबन्धेन विविधागमवासिताः ॥ ४८ ॥

कूटस्थनित्यतां [2]केचित्[3]केचिदाहुरकर्तृताम् ।
[4]अन्ये तु जडता[5]मन्ये चित्तसंततिरूपिताम् ॥ ४९ ॥

इत्याद्यनेकसिद्धान्त[6]गहने गहने स्थितः ।
यातु दिग्भ्रमसंभ्रान्तः पुरुषः केन वर्त्मना ॥ ५० ॥

इत्युक्त्वा वाचमुच्चार्थां विरराम नरेश्वरः ।
भारतीमथ गम्भीरां जगाद परमेश्वरः ॥ ५१ ॥

त्वयैवं ब्रुवता सूक्तं नृप सत्यमिदं कृतम् ।
उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः ॥ ५२ ॥

जीवाजीवादि यत्पृष्ट[7]मस्पृष्टपरदूषणम् ।
यथा भवति तत्सर्वं तथाहं कथयामि ते ॥ ५३ ॥

[8]जीवो नास्तीति पक्षोऽयं प्रत्यक्षादिनिराकृतः ।
तत्र हेतुमुपन्यस्यन्कुर्यात्कः स्वविडम्बनाम् ॥ ५४ ॥

प्रतिजन्तु यतो जीवः [9]स्वसंवेदनगोचरः ।
सुखदुःखादिपर्यायैराक्रान्तः प्रतिभासते ॥ ५५ ॥

[10]नचास्वविदितं ज्ञानं वेद्यत्वात्कलशादिवत् ।
स्वात्मन्यपि क्रियादृष्टेर्दीपादेः स्वप्रकाशनात् ॥ ५६ ॥

---

१. मिथ्या जल्पन्ति. २. सांख्याः. ३. मीमांसकाः. ४. नैयायिकाः. ५. बौद्धाः. ६. दुष्प्रवेशे वने. ७. परोपकल्पितदूषणसंपर्करहितं यथा स्यात्. ८. जीवो नास्तीति चार्वाकैरुपन्यस्यते. प्रसिद्धो धर्मी पक्षः. तत्र चार्वाकाप्रसिद्धस्य जीवस्य पक्षत्वकरणे स्वविडम्बनां कः कुर्यात्? प्रसिद्धपक्षस्य हेतुविषयत्वं क्रियते. अथवा जीवो नास्ति अनुपलब्धेरिति भवतानुपलम्भविषयीक्रियमाणो जीवः पक्षः प्रत्यक्षेणोपलम्भेन स्वसंवेदनलक्षणेनैव निराकृत इति. ९. न चेदं स्वसंवेदनगोचरत्वमसिद्धं सुखदुःखादिपर्यायैराक्रान्तत्वात्. १०. अस्वविदितं ज्ञानं न भवति वेद्यत्वात्, यद्वेद्यं तदस्वविदितं यथा कलशादिरिति न वाच्यम्, स्वात्मन्यपि क्रियादर्शनात् दीपादेः स्वप्रकाशनवत्, यथा दीपः स्वं प्रकाशयन्नेवार्थं प्रकाशयति तथा ज्ञानं स्वं विदन्नेवार्थं वेत्तीति.

विषयान्तरसंचारो[1] न च स्यादस्ववेदिनः ।<br>
अपरापरबोधस्य[2] वेदनीयस्य संभवात् ॥ ५७ ॥

अनवस्थालता च स्यान्नभस्तलविसर्पिणी ।<br>
यदेवाविदितं तेषु[3] तन्न पूर्वस्य वेदकम् ॥ ५८ ॥

तस्माद्विषयविज्ञानमप्रत्यक्षमवस्थितम् ।<br>
तदप्रत्यक्षतायां च विषयस्यापि सा[4] गतिः ॥ ५९ ॥

परोक्षादपि चेज्ज्ञानादर्थाधिगतिरिष्यते ।<br>
परेण विदितोऽप्यर्थस्तथा स्वविदितो भवेत्[5] ॥ ६० ॥

तस्मात्स्ववेदने सिद्धे प्रत्यक्षे सति युक्तितः ।<br>
प्रत्यक्षबाधा[6] न भवेत्कथं नास्तित्ववादिनाम् ॥ ६१ ॥

जीवे सिद्धेऽपि गर्भादिमरणान्ते स्ववेदनात् ।<br>
प्रागूर्ध्वं च कथं सिद्धिस्तस्येति यदि मन्यसे ॥ ६२ ॥

सदकारणवत्त्वेन[7] सिद्धा तत्राप्यनादिता ।<br>
अनन्तता च वाय्वग्निपृथिवीपयसामिव ॥ ६३ ॥ (युग्मम्)

न चासिद्धमहेतुत्वं[8] हेतोः कस्याप्ययोगतः ।<br>
भूतानां च न हेतुत्वं सह प्रत्येकपक्षयोः ॥ ६४ ॥

प्रत्येकपक्षे[9] जीवानां भूतसंख्या प्रसज्यते ।<br>
सहपक्षेऽप्यसंविद्भ्यस्[10]तेभ्यः स्याच्चेतनः कथम् ॥ ६५ ॥

सजातीयं ह्युपादानं दृष्टं घटपटादिषु ।<br>
मृदादीनां हि हेतूनां घटाद्यनुगमेक्षणात् ॥ ६६ ॥

---

१. अस्ववेदिनः स्वपरिज्ञानरहितस्य विषयान्तरे चेतनाचेतनान्तरे संचारो न स्यात्. २. अन्योन्यपरिज्ञानस्य. ३. अपरापरबोधेषु यदेवाविदितं तदेव पूर्वस्य स्वस्य वेदकं न स्यात्. ४. तत्परोक्षत्वे विषयस्यापि परोक्षत्वमेव. ५. अतः स्याद्वादमतापेक्षया जीवः स्वकीये काये स्वसंवेदनप्रत्यक्षसिद्धः परकीये चानुमानादिलक्षणात्परोक्षादिति भावः. ६. अध्यक्षेण जीवमपह्नुवानानां तेषां प्रत्यक्षमेव जीवव्यवस्थापकं भवेदिति भावः. ७. अकारणवत्त्वम्. ८. ननु च भूतानि हेतव इति चेन्न, सह प्रत्येकपक्षयोः क्रमेण युगपद्वा भूतानां हेतुत्वं कारणत्वं न. ९. एकैकाद्भूताज्जीवोत्पत्तौ. १०. अचेतनेभ्यः.

युज्यते व्यभिचारोऽपि न शृङ्गादेः शरादिना ।
तत्रापि पुद्गलत्वेन सजातीयत्वसंभवात् ॥ ६७ ॥

विजातिभ्योऽपि भूतेभ्यो जायते यदि चेतनः ।
पयसोऽपि भवेत्पृथ्वी तेन तत्त्वचतुष्टयम् ॥ ६८ ॥

न चान्यदस्त्युपादानं भूम्यादिव्यतिरेकतः ।
भूतानां संहतिर्येन कल्प्येत सहकारिणी ॥ ६९ ॥

न चोपादानधर्मोऽपि काये कोऽप्यवलोक्यते ।
शरीरे तदवस्थेऽपि जीवे विकृतिदर्शनात् ॥ ७० ॥

घटादिकारणेष्वेतन्मृदादिषु न चेक्ष्यते ।
ततोऽनुमानबाधापि पक्षं व्याघ्रीव वीक्षते ॥ ७१ ॥

हेतुश्चानुपलम्भादिरसिद्धोऽभावसाधने ।
तस्य स्वंवेदनाध्यक्षादुपलम्भस्य संभवात् ॥ ७२ ॥

न चात्मभूतयोरैक्यं चिदचिद्रूपभेदतः ।
विभिन्नप्रतिभासित्वाद्भेदलक्षणसंभवात् ॥ ७३ ॥

इत्थमात्मनि संसिद्धेऽनित्यत्वैकान्तकल्पना ।
तस्यान्यैः क्रियते तेऽपि प्रत्यक्षेणैव बाधिताः ॥ ७४ ॥

यतः स्वंवेदनाद्यात्मा सुखदुःखादिपर्ययैः ।
विवर्तमानः सततं प्रतिप्राणि प्रकाशते ॥ ७५ ॥

सुखदुःखादिपर्याया जीवान्न च विभेदिनः ।
तस्यामी इतिसंबन्धकल्पनानुपपत्तितः ॥ ७६ ॥

नित्यस्यानुपकारित्वात्समवायो न युज्यते ।
उपकाराश्रया सर्वा संबन्धसमवस्थितिः ॥ ७७ ॥

---

१ पुद्गलत्वजात्या. २ एवं च तत्त्वसंकरः स्यात्. ३ ननु भूतानां चैतन्योत्पत्तौ सहकारित्वमेवेति चेन्न, उपादानान्तराभावात्. ४ विविधाकृत्यवलोकनात्. ५. यथा प्रत्यक्षेण पक्षबाधा तथानुमानेनापीति भावः. ६. स्वसंवेदनस्य तद्भावसाधकत्वात्. ७. चिदचितोः प्रतिभासभेदात्.

उपकारोऽपि[1] भिन्नत्वात्तस्येति कथमुच्यते ।
उपकारान्तरापेक्षा विदध्यादनवस्थितिम् ॥ ७८ ॥
स्यादभिन्नस्ततो जीवः सुखदुःखादिपर्ययैः ।
तथापि परिणामित्वात्कथं कूटस्थनित्यता ॥ ७९ ॥
एतेन जडतां तस्य ब्रुवाणा विनिवारिताः ।
चिद्रूपसुखदुःखादिपर्यायैरैक्यसंभवात्[2] ॥ ८० ॥
न चाप्यकर्तृता तस्य बन्धाभावादिदोषतः ।
कथं ह्यकुर्वन्बध्येत कुशलाकुशलक्रियाः ॥ ८१ ॥
भुक्तिक्रियायाः कर्तृत्वं भोक्तात्मेति स्वयं वदन् ।
तदेवापह्नुवानः सन्किं न जिह्रेति कापिलः ॥ ८२ ॥
अचेतनस्य बन्धादिः प्रधानस्याप्ययुक्तिकः ।
तस्मादकर्तृता पापादपि पापीयसी मता ॥ ८३ ॥
चित्तसंततिमात्रत्वमप्ययुक्तं[3] प्रकल्पितम् ।
संतानिव्यतिरेकेण यतः काचिन्न संततिः ॥ ८४ ॥
व्यतिरेकेऽपि[4] नित्यत्वं संतानस्य यदीष्यते ।
प्रतिज्ञाहानिदोषः स्यात्क्षणिकैकान्तवादिनाम् ॥ ८५ ॥
क्षणिकत्वेऽपि संतानिपक्षनिक्षिप्तदूषणम् ।
कृतनाशादिकं तस्य[5] सर्वमेव प्रसज्यते ॥ ८६ ॥
न[6] च व्यापकता तस्य घटनामुपढौकते ।
स्वसंविदितरूपस्य बहिर्देहादवेदनात् ॥ ८७ ॥
तस्मादनादिनिधनः स्थितो देहप्रमाणकः ।
कर्ता भोक्ता चिदाकारः सिद्धो जीवः प्रमाणतः ॥ ८८ ॥

---

१. अस्ति नित्यस्योपकारित्वमिति चेत् तस्मादुपकारोऽभिन्नो भिन्नो वा । अभिन्नश्चेत्तत्समः भिन्नश्चेत्संबन्धासिद्धिः । उपकारान्तरमपेक्ष्य संबन्धकरणेऽनवस्थितिः स्यात्. २. परिणामित्वेनैक्यघटनात्. ३. चित्तसंततिमात्रमात्मेत्येके. ४. संतानिनः सकाशात्. ५. संतानस्य. ६. तस्य व्यापकत्वेन कृतनाशादेरभाव इति चेन्न.

येऽप्यजीवादयो भावास्तदपेक्षा व्यवस्थिताः ।
तेऽपि संप्रति संसिद्धास्तन्न तत्त्वमुपप्लतम् ॥ ८९ ॥
जीवाजीवादिषड्वर्गे प्रतिपद्यापरे पुनः ।
मोक्षे विप्रतिपद्यन्ते मीमांसापक्षपातिनः ॥ ९० ॥
तेषामप्यनुमाबाधा परिधावति पृष्ठतः ।
यतः कर्मक्षयो मोक्षः स च सिद्धोऽनुमानतः ॥ ९१ ॥
तथाहि क्वचिदप्यस्ति पुंसि कृत्स्नावृतिक्षयः ।
तत्[1]कार्यसकलज्ञत्वस्यान्यथानुपपत्तितः ॥ ९२ ॥
सर्वज्ञत्वं न चासिद्धं कस्यचिद्बाधकात्ययात् ।
सर्वत्र बाधकाभावादेव वस्तुव्यवस्थितिः ॥ ९३ ॥
न तस्य बाधकं तावत्प्रत्यक्षमुपपद्यते ।
तस्याक्षजत्वाद[2]त्यक्षे न विधिर्न निषेधनम् ॥ ९४ ॥
न चानुमानं तद्बाधां विधातुं भवति क्षमम् ।
तल्लिङ्गं पुरुषत्वादि व्यभिचारि यतोऽखिलम् ॥ ९५ ॥
यथाहि पुरुषत्वेऽपि वेदार्थज्ञानगोचरः ।
कस्याप्यतिशयस्तद्वत्सर्वार्थज्ञानगोचरः ॥ ९६ ॥
रासभो न यथा शृङ्गी देशकालान्तरेऽखिलः ।
तथा पुमान्न सर्वज्ञो देशकालान्तरेऽखिलः ॥ ९७ ॥
इत्यादि नोपमानं च युक्तमिष्टविघाततः ।
तथा हि [3]खेचरादीनां न स्यात्खगमनादिकम् ॥ ९८ ॥
तस्मान्नरविशेषोऽसौ यस्य सा सकलज्ञता ।
तथा खरविशेषश्चेदिष्टा तस्यापि शृङ्गिता ॥ ९९ ॥
न चार्थापत्तिरप्यस्ति सर्वज्ञाभावसाधनी ।
को ह्यर्थो[4]ऽसंभवी ते[5]नें विना य[6]स्तं प्रकल्पयेत् ॥ १०० ॥

---

१. आवृत्तिक्षयः कार्यं सर्वज्ञत्वं कारणम्. २. अतीन्द्रिये. ३. यथात्रत्येदानींतनाः पुरुषाः खगामिनो न तथा देशान्तरे कालान्तरे च नैवेतीष्टविघातः. ४. अनुत्पद्यमानः. ५. सर्वज्ञभावेन. ६. सर्वज्ञाभावम्.

नाप्यागमेन सर्वज्ञः कृतकेनेतरेण वा ।
बाध्यते कर्तृहीनस्य [1]तस्यात्यन्तमसंभवात् ॥ १०१ ॥
[2]कर्तुरस्मरणादिभ्यः कर्त्रभावो न सिध्यति ।
अज्ञातकर्तृकैर्वाक्यैर्व्यभिचारस्य संभवात् ॥ १०२ ॥
न च कश्चिद्विशेषोऽस्ति पौरुषेयेष्वसंभवी ।
अतीन्द्रियार्थसंवादः सर्वज्ञोक्तेऽपि संभवेत् ॥ १०३ ॥
विवादविषयापन्नं ततः शास्त्रं सकर्तृकम् ।
दृष्टकर्तृकतुल्यत्वादकलङ्कादिशास्त्रवत् ॥ १०४ ॥
तस्मादकर्तृकं शास्त्रं नास्ति सर्वज्ञबाधकम् ।
कृतकं च द्विधाभिन्नं [3]सर्वज्ञेतरहेतुकम् ॥ १०५ ॥
असर्वज्ञकृतं तावन्न प्रमाणमतीन्द्रिये ।
सकलज्ञप्रणीतं तु तस्य प्रत्युत साधकम् ॥ १०६ ॥
प्रस्तुतस्यानुमानस्य साधकत्वेन संभवात् ।
[4]प्रमाणपञ्चकाभावोऽप्यखिलज्ञं न बाधते ॥ १०७ ॥
तस्मादशेषवित्कश्चिदस्तीत्यागमसंभवात् ।
प्रमाणं बाधकाभावाद्बुद्धिर[5]क्षादिबुद्धिवत् ॥ १०८ ॥
ततो मोक्षोऽपि संसिद्धो [6]रत्नत्रयनिबन्धनः ।
जीवाजीवाश्रवैर्बन्धनिर्जरासंवरैः समम् ॥ १०९ ॥
वचोभिरिति तत्त्वार्थशंसिभिश्चु[7]म्बकैरिव ।
स शल्यमिव संदेहमाचकर्ष महीपतेः ॥ ११० ॥
यदुक्तं सूरिणा तेन तत्तथेति प्रपद्य सः ।
पप्रच्छ पुनरात्मीयान्भवान्मुदितमानसः ॥ १११ ॥
मुनिना वक्तुमारेभे तस्मै भवपरम्परा ।
चक्रे भव्यसभा चित्तमवधानपरं परा ॥ ११२ ॥

---

१. आगमस्य. २. अकर्तृक एवागमः कर्तुरस्मरणात्. ३. सर्वज्ञकर्तृकमसर्वज्ञकर्तृकं चेति. ४. प्रत्यक्षादिनिराकृतिः. ५. प्रत्यक्षादिज्ञानवत्. ६. रत्नत्रयं निबन्धनं कारणं यस्य. ७. चुम्बकपाषाणैरिव.

द्वीपे नृप तृतीये यो विद्यते पूर्वमन्दरः ।
क्रीडत्किनरसंकीर्णलताभवनसुन्दरः ॥ ११३ ॥
तस्यापरविदेहेऽस्ति सुगन्धिरिति नामतः ।
देशो विभूष्य शीतोदानद्युत्तरतटं स्थितः ॥ ११४ ॥
बिभ्राणैर्बृहदुद्दण्डपिच्छच्छत्रावलिश्रियम् ।
राजन्ते राजवद्यस्य प्रदेशाः क्रमुकद्रुमैः ॥ ११५ ॥
सुगन्धिकुसुमामोदैः सुगन्धयति यो दिशः ।
सर्वतोऽपि निजामाख्यां कर्तुमर्थवतीमिव ॥ ११६ ॥
अकृष्टपच्यसस्याढ्ये निरीतौ निरवग्रहे ।
यत्र नित्यप्रमोदिन्यो मोक्षप्राप्ता इव प्रजाः ॥ ११७ ॥
ग्रामैः कुक्कुटसंपात्यैः[1] सरोभिर्विकचाम्बुजैः ।
सीमभिः सस्यसंपन्नैर्यः समन्ताद्विराजते ॥ ११८ ॥
अर्थं धर्माय सेवन्ते कामं संतानवृद्धये ।
यत्र न व्यसनाल्लोकाः परलोकक्रियोद्यताः ॥ ११९ ॥
यस्मिन्निरन्तरारामविश्रामैर्विधुतश्रमाः ।
मन्यन्तेऽध्वानमध्वन्या गृहप्राङ्गणसंनिभम् ॥ १२० ॥
यथाभिलषितं वस्तु शश्वत्संपादयन्नृणाम् ।
जिगीषतीव यः कल्पपादपैर्मण्डितां महीम् ॥ १२१ ॥
विद्युतश्चञ्चला यत्र स्वभावेन न संपदः ।
कृष्णानि प्रावृडभ्राणि चरितानि न देहिनाम् ॥ १२२ ॥
क्वचिद्गोधनहुंकारैरिक्षुयन्त्रारवैः क्वचित् ।
क्वचिच्छिखण्डिनां नादैर्निगमा[2] यस्य सुन्दराः ॥ १२३ ॥
मज्जत्सीमन्तिनीसार्थकुचसंक्रान्तकुङ्कुमैः ।
रक्तांशुकैरिवाभान्ति यस्मिञ्जलधियोषितः[3] ॥ १२४ ॥
महाविभवसंपन्नं तत्रास्ति श्रीपुरं पुरम् ।
लोकपुण्यैः समुत्पन्नं त्रिविष्टपमिवापरम् ॥ १२५ ॥

१. कुक्कुटसंपाते वसन्तीति तैः । अतिसंनिकृष्टैरिति यावत्. २. ग्रामाः. ३. नद्यः.

प्रासादशृङ्गसलग्नरत्नोपलमरीचिभि ।
सदैवान्तरिता यत्र ज्योतिर्गणविभाभवत् ॥ १२६ ॥
चन्द्रकान्तस्तुतेर्यत्र सूर्यकान्तोद्भवाग्नित· ।
मिमीते सालसरुद्धरविचन्द्रोदयं जन ॥ १२७ ॥
यत्प्रासादशिरोलग्नपद्मरागांशुभिर्निभ· ।
भिन्न करोत्यकाण्डेऽपि संध्याशङ्का शरीरिणाम् ॥ १२८ ॥
वासराधिपतिस्तुङ्गप्रतोलीशिखर शनै· ।
यत्राधिरुह्य पूर्वाह्णे प्रपूर्णकलशायते ॥ १२९ ॥
प्राकारशिखरासन्नैस्तौरतारकदम्बकै· ।
यत्र दीपोत्सवभ्रान्तिस्तन्यतेऽनुदिन निशि ॥ १३० ॥
प्राकारः परितो यत्र शृङ्गैरुत्तम्भितोडुभि· ।
नाकावलोकनोत्कण्ठां बिभ्राण इव भासते ॥ १३१ ॥
मानोन्नता महाभोगा मत्तवारणशालिन ।
बहुभूमियुता यत्र प्रासादा पार्थिवोपमा· ॥ १३२ ॥
अम्बुना घनकिंजल्कच्छादितेन निरन्तरम् ।
स्वीकुर्वाणा क्वचिल्लक्ष्मी हिरण्यसञ्चितक्षिते· ॥ १३३ ॥
तीरजैस्तरुसंतानै· पयसि प्रतिबिम्बितै ।
पातालोपवनारेका कुर्वत्यन्यत्र पत्रिणाम् ॥ १ ४ ॥
बिभ्रती काशसकाशपक्षविक्षेपशोभिन· ।
हसान्कापि मरुल्लोलान्फेनपुञ्जानिवात्मन ॥ १३५ ॥
तटपादपसंरुद्धैर्निष्कम्पसलिलानिलै ।
मुग्धस्त्रीणा वितन्वाना कापि स्फटिकभूभ्रमम् ॥ १३६ ॥

---

१. रत्नपाषाणकिरणै २ जानीते. ३. तमोहरोडुसमूहै ४. स्थगिततारकै . ५. मानेन परिमाणेनावलेपेन च. ६ परिपूर्णतासहिता गरिष्ठभोगाश्च ७. मग्नीवराजमाना: प्रभिन्नगजशोभिनश्च ८. सुवर्णनिर्मितभूमे . ९. पातालवनभ्रान्तिम्

मज्जत्पुरंध्रिधम्मिल्लगलदुज्ज्वलमल्लिका ।
यत्र तारकितेव द्यौः सर्वतो भाति खातिका ॥ १३७ ॥

(पञ्चभिः कुलकम्)

तीक्ष्णत्वं केवलं यत्र बोधे न वचने नृणाम् ।
कठिनत्वं कुचद्वन्द्वे कामिनीनां न मानसे ॥ १३८ ॥
भङ्गः कुचेषु नारीणां व्रतेषु न तपस्विनाम् ।
विरसत्वं कुकाव्येषु मिथुनेषु न कामिनाम् ॥ १३९ ॥
विरोध[१]ः पञ्जरेष्वेव न मनःसु महात्मनाम् ।
नाभिष्वेव च नीचत्वं नाचारेषु कुटुम्बिनाम् ॥ १४० ॥
[२]प्राकारपरिखावप्रैः परितः परिवेष्टितम् ।
परिवेषत्रयान्वीतचन्द्रवद्यद्विराजते ॥ १४१ ॥
प्रसिद्धेनाविरुद्धेन [३]मानेनाव्यभिचारिणा ।
वणिजस्तार्किकाश्चापि यत्र वस्तु [४]प्रमिन्वते ॥ १४२ ॥

वापीवनायतनसौधतडागरम्यं
स्वर्गाभिभाविविभवोदयवर्धमानम् ।
शक्येत तन्न गुरुणापि पुरं यथाव-
दाख्यातुमल्पमतिना किमु मद्विधेन ॥ १४३ ॥

इति श्रीवीरनन्दिकृतावुदयाङ्के चन्द्रप्रभचरिते महाकाव्ये द्वितीयः सर्गः ।

---

तृतीयः सर्गः ।

तत्राभिनन्दितनिजाखिलबन्धुपद्मो
न्यायांशुजालनिहतापनयान्धकारः ।
संकोचितारिवनितास्यनिशाकरश्रीः
श्रीषेण इत्यजनि भानुनिभो नरेन्द्रः ॥ १ ॥

---

१. वैरं पक्षिरोधश्च. २. प्राकारेण, परिखया खातिकया, वप्रेण धूलिशालेन. ३. मानेन प्रस्थादिना प्रमाणेन च. ४. प्रमाणविषयीकुर्वते.

यस्य प्रतापदहनेन विलङ्घ्यमान-
मूर्तिर्निरन्तरमरातिगणः समस्तः ।
द्रष्टुं दिशं न विदिशं चकितः प्रभूष्णु[1]-
र्घूकोपमः समभवद्गिरिगह्वरस्थः ॥ २ ॥

यस्य स्फुरद्भिरनुरागकरैर्यशोभि-
रुद्भासितासु सकलासु दिगङ्गनासु ।
[2]तन्मात्रकार्यैकरणप्रवणाय लोकः
शीतांशवे न नितरां स्पृहयांबभूव ॥ ३ ॥

संपूर्णशारदनिशाकरकान्तकीर्ति-
वल्लीवितानपरिवेष्टित[3]विष्टपान्तः ।
यः पोषणाद्विनयनाद्व्यसनापनोदा-
त्स्वामी गुरुः सुहृदभूदखिलप्रजानाम् ॥ ४ ॥

यत्र प्रशान्तसकलव्यसने विनीते
स्वाभाविकं [4]मतिमहातिशयं प्रपन्ने ।
चक्रुर्निवासमखिला नरनाथविद्याः
पर्युत्सुका इव परस्परदर्शनस्य ॥ ५ ॥

तुङ्गत्वम[5]द्रिपतिना [6]हरिणेश्वरत्वं
शीतांशुना सुभगता [7]वशिता मुनीन्द्रैः ।
शौर्यं मृगाधिपतिना गुरुणा मनीषा
गाम्भीर्यमम्बुनिधिना तुलितं यदीयम् ॥ ६ ॥

नागाः [8]पदातिवृषभास्तुरगा रथाश्च
शोभानिमित्तमभवन्खलु यस्य सर्वे ।
आक्रम्य मण्डलपतीनखिलान्स यस्मा-
त्सर्वां बुभोज वसुधां निजतेजसैव ॥ ७ ॥

---

१. समर्थः. २. प्रकाशमात्रकार्यैकरणसमर्थाय. ३. परिवेष्टितं विष्टपान्तं येन. ४. बुद्धि-माहात्म्यम्. ५. मेरुणा. ६. इन्द्रेण. ७. जितेन्द्रियता. ८. भृत्यप्रधानाः, पदातयो वृषभाश्च वा.

[1]यत्र क्वचिद्गुणगणो गतवान्सहैव
वृद्धिं मया नृपतिरेष पुनर्न जाने ।
मां द्वेष्टि शंसति शमप्रभृतीनितीव
यो जातनिर्भररुषा मुमुचे मदेन ॥ ८ ॥
वक्षः श्रियो भुजयुगं वरवीरलक्ष्म्याः
कान्तेः शरीरमखिलं हृदयं क्षमायाः ।
यस्यास्पदं मुखमजायत वाग्विभूते-
र्नित्वाश्रयाय सकलस्य सतां प्रयासः ॥ ९ ॥
भेजे नितान्तम[2]जलोऽपि न[3]दीनभावं
यश्चाभवद्वसुमतीति[4]लकोऽप्य[5]शोकः ।
दोषाकरश्च न बभूव कलाधरोऽपि
सर्वं हि विस्मयकरं महतां स्वरूपम् ॥ १० ॥
धर्मोऽर्थसंचयनिमित्तमुदारमर्थः
कामस्य हेतुरितरः सुखयोर्निरेते ।
यत्र त्रयोऽप्यविरतं न परस्परस्य
जैनेश्वरा इव नया विजहुर्व्यपेक्षाम् ॥ ११ ॥
वाञ्छद्भिराश्रयविशेषमिवात्मयोग्य-
मौदार्यधैर्यविनयादिगुणैरशेषैः ।
अभ्यर्थितः सततमादरवद्भिरेष
वेधाः ससर्ज नृपमालयभूतमेनम् ॥ १२ ॥
भानुर्भवेद्यदि मनागिह सौम्यरूप-
स्तेजस्वितामुपगतो मृगलाञ्छनो वा ।
धामाधिको विदधदेष जनानुरागं
तेनो[6]र्यमानपदवीं प्रभुरुद्वहेत ॥ १३ ॥

---

१. यस्मिन्कस्मिंश्चित्पुरुषे. २. जलरहितः अजडः पण्डितश्च. ३. समुद्रभावं दीनभावं दीनत्वं च न. ४. वृक्षविशेषो ललामभूतश्च. ५. वृक्षविशेषः शोकरहितश्च. ६. सूर्येण चन्द्रेण च.

श्रीकान्तया सरसिजाकरसंनिवासि-
श्रीकान्तया सकललोकमनोभिरामः ।
देव्या स्वकीयवपुरव्यतिरिक्तयाप
योगं शशीव कलयामलया स भूपः ॥ १४ ॥
लावण्यसंपदमलाम्भसि संनिमज्ज्य
देहं स्वमुज्ज्वलमिवातितरां विधातुम् ।
श्लाघ्यः शरद्विशदचन्द्रगभस्तिगौरो
यस्यास्तनौ समुदितः सकलो गुणौघः ॥ १५ ॥
शीलक्षमाविनयरूपगुणैर्महार्घा-
मुच्चित्य यामखिलविष्टपसुन्दरीषु ।
भर्तुर्मनो रमयितुं स्वसहायभूतां
लक्ष्मीरिवादरपरा स्वयमेव वव्रे ॥ १६ ॥
चन्द्रोज्ज्वलेन यशसा कथितं सुराणा-
मीशस्य संसदि परीतवता त्रिलोकीम् ।
रूपं ग्रहीतुमनसः स्पृहयन्ति यस्या
देव्यो दिवोवतरणाय तपांसि कर्तुम् ॥ १७ ॥
दोषानुबन्धरहिता तमसा विमुक्ता
रम्या निजोदयविकासितबन्धुपद्मा ।
प्राभातिकी द्युतिरिवाम्बुजबान्धवस्य
या कान्तिमोषधिपतेः परिभूय तस्थौ ॥ १८ ॥
धर्मार्थयोरविदधत्स विशामधीशो
बाधा विधूपमयशोधवलीकृताशः ।
सार्धं तया प्रणयकोपकृतान्तराणि
देव्या सुखान्यनुभवन्दिवसान्निनाय ॥ १९ ॥
कृत्वापरेद्युरखिलावसरं स याव-
दन्तःपुरं व्रजति किंनरगीतकीर्तिः ।

१. प्राप्तवान्. २. वेष्टितवता. ३. स्नेहकषायविहितावकाशानि. ४. निखिलकृत्यम्.

